अपां मध्ये तेजोऽनुप्रवेश आगमसिद्ध एवेत्यर्थः तथाहि "आप-स्ता अग्निं गर्भमादधीरन् या अग्निं गर्भं दधिरे सुवर्णा" इत्यादि ॥१०॥

* अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ ११ ॥ *

ननु विस्फूर्जथुः कथमुत्पद्यते संयोगविभागौ शब्दयोनी तौ च नानुभूयेते इत्यत आह ।

विस्फूर्जथुरिति शेषः अद्भिः स्तनयित्नोः संयोगविभागौ निमित्त-कारणीभूय स्तनयित्नोरेवाकाशेन संयोगादसमवायिकारणादाकाशे सम-वायिकारणे शब्दं गर्जितं जनयतः । क्वचिच्च वायुबलाहकसंयोगवि-भागौ निमित्तकारणे बलाहकवियत्संयोगविभागावसमवायिकारणे, कर्मकारणाधिकारेऽपि प्रासङ्गिकमिदमुक्तम्, यद्वा मेघाकाशसंयोगे विभागे वा शब्दासमवायिकारणे कारणम् अपामेव नोदनाभिघात-जनितं कर्मेति सूचितं कर्मण एवाधिकारप्राप्तत्वात् ॥ ११ ॥

* पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्या-तम् ॥ १२ ॥ *

भूकम्पं प्रत्यदृष्टवदात्मसंयोगः कारणमुक्तं तत्रैवाकस्मिकदिग्दाह-हेतोस्तेजसः आकस्मिकवृक्षादिक्षोभहेतोश्च प्रभञ्जनस्य कर्म यत् संजा-यते तत्राप्यदृष्टवदात्मसंयोगोऽसमवायिकारणम्, वायुतेजसी समवायि-कारणम्, अदृष्टं निमित्तकारणमित्यर्थः, कर्मशब्दस्य द्याष्टत्तिर्मेरो-ल्कादिकर्मसूचनार्था ॥ १२ ॥

* अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यक्पवनमणूनां मन-सश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥ *

अदृष्टवदात्मसंयोगासमवायिकारणकं कर्मान्तरमाह ।

आद्यमिति सर्गाद्यकालीनमित्यर्थः, तदा नोदनाभिघातादीना-मभावात् अदृष्टवदात्मसंयोग एव तत्रासमवायिकारणम् आद्यमूर्द्ध्व-ज्वलनम् आद्यं तिर्य्यक्पवनमिति, इतरेषां ज्वलनपवनकर्मणां वेगा-

समवायिकारणकत्वमेव मन्तुमुचितं दृष्टे कारणे सत्यदृष्टकल्पमानवका-शात् ॥ १३ ॥

* हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ १४ ॥ *

अनाद्यं कर्माधिकृत्याह ।

मुषलोत्क्षेपणादौ यथा प्रयत्नवदात्मसंयोगासमवायिकारणकं हस्तकर्म तथाऽभिमतविषयग्राहिणीन्द्रिये सन्निकर्षार्थं यन्मनसः कर्म तदपि प्रयत्नवदात्मसंयोगासमवायिकारणकमेव यद्यपीन्द्रियं मनो न साक्षात्प्रयत्नविषयस्तथापि मनोवहनाडीगोचरेण प्रयत्नेन मनसि कर्मोत्पत्तिर्द्रष्टव्या, नाड्यास्तु त्वगिन्द्रियग्राह्यत्वमङ्गीकर्त्तव्यम् अन्य-था प्राणवहनाडीगोचरेण प्रयत्नेनाशितपीताद्यभ्यवहरणमपि न सम्भवेत् ॥ १४ ॥

* आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥ १५ ॥ *

ननु मनसि कर्म उत्पद्यत इत्यत्रैव न प्रमाणमत आह ।

सुखदुःखे इत्युपलक्षणं ज्ञानप्रयत्नाद्यपि द्रष्टव्यं मनसो वैभवं पूर्व-मेव निराकृतम्, अणुत्वञ्च साधितम्, युगपज्ज्ञानानुत्पत्तिश्च मनसो लिङ्गमित्युक्तं तेन तत्तदिन्द्रियप्रदेशेन मनःसंयोगमन्तरेण सुखदुःखे न स्यातामेव यदि मनसि कर्म न भवेत् न भवेच्च पादे मे सुखं शिरसि मे वेदनेत्याद्याकारोऽनुभव इत्यर्थः। यद्यपि मनःसन्निकर्षाधीनः सर्वो-ऽप्यात्मविशेषगुणस्तथापि सुखदुःखे तीव्रसंवेगितयाऽतिस्फुटत्वा-दुक्ते ॥ १५ ॥

* तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः ॥ १६ ॥ *

नन्वेवं यदि चपलं मनस्तदा चित्तनिरोधाभावाद्योगं विना नात्मसाक्षात्कारो नवा तदन्तरेण मोक्ष इति शास्त्रारम्भवैफल्यमत आह ।

विषयेभ्यश्चात्ययवत उदासीनस्य बहिरिन्द्रियेभ्यो व्यावृत्तं मनो

यदात्मस्थमात्ममात्रनिष्ठं भवति तदा तत्कर्मानुगुणप्रयत्नाभावात् कर्म मनसि नोत्पद्यते स्थिरतरं मनो भवति स एव योगः चित्तनिरोधलक्षणत्वाद् योगस्य, तदनारम्भ इति मनसः कर्मानारम्भ इत्यर्थः, यद्वा तत्पदेन सुखदुःखे एवाभिधीयेते प्रक्रान्तत्वात्, दुःखाभाव इति दुःखाभावसाधनत्वाद्योग एव दुःखाभावः "अन्नं वै प्राणः" इतिवत्, यद्वा दुःखस्याभावो यत्रेति बहुव्रीहिः, शरीरस्येति शरीरावच्छिन्नस्यात्मनः, स योग इति प्रसिद्धिसिद्धतया तत्पदम्, अयं स योगः। यद्वात्मपदेनात्र प्राण उच्यते उपचारात् प्राणानुमेयत्वादात्मनः तथाच प्राणवहनाख्यं कर्मणा प्राणकर्मापि जायते यद्वा जीवनयोनियत्नवदात्मप्राणसंयोगासमवायिकारणकं प्राणकर्म, जीवनयोनिश्च यत्नोऽतीन्द्रियः प्राणसञ्चारानुमेयः कथमन्यथा सुषुप्त्यवस्थायामपि श्वासप्रश्वासगतागतमिति भावः॥ १६॥

* अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चेत्यदृष्टकारितानि॥ १७॥ *

ननु प्राणस्य मनसश्च कर्म यदि प्रयत्ननिमित्तकं तदा प्राणमनसी यदा मरणावस्थायामपसर्पतः देहाद्बहिर्भवतः देहान्तरोत्पत्तौ तत्र पुनरुपसर्पतः प्रविशतः तत्र प्रयत्नाभावात्तदुभयमनुपपन्नम्, अशितपीतं भक्तपानीयादि तस्यापि शरीरावयवोपचयहेतुर्यः संयोगस्तज्जनकं यत् कर्म यच्च गर्भवासदशायां संयोगविभागजनकं कर्म तेषां कथमुत्पत्तिरत आह।

अत्र नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकनिर्देशः, संयोगपदञ्च तत्कारणे कर्मणि लाक्षणिकम्, अपसर्पणं देहारम्भककर्मक्षये देहादेव प्राणमनसोरुत्क्रमणम्, उपसर्पणञ्च देहान्तरोत्पत्तौ तत्र प्राणमनसोः प्रवेशनम्, अशितपीतादिसंयोगहेतुश्च कर्म, कार्य्यान्तरं गर्भशरीरं तत्संयोगहेतुश्च यत् कर्म तत् सर्वमदृष्टवदात्मसंयोगासमवायिकारणकम्, इतिकारेण धातुमलकर्मणामप्यदृष्टवदात्मसंयोगासमवायिकारणकत्वं सूचयति॥ १७॥

* तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥ १८ ॥ *

ननु देहान्तरोत्पत्तेरावश्यकत्वञ्चेत्तदा कथं मोक्ष इत्यत आह।

इदमत्राकूतं योगबलेनात्मतत्त्वसाक्षात्कारे सति तेन च सवासनमिथ्याज्ञाने ध्वस्ते तन्निबन्धनानां रागद्वेषमोहानां दोषाणामपायात् प्रवृत्तेरपाये तन्निबन्धनस्य जन्मनोऽपाये तन्निबन्धनस्य दुःखस्यापाय इति तावद्दुस्तुर्गतिः, तत्र योगिनो योगजधर्मबलेन तत्तद्देशकालतत्तुरगमतङ्गजभुजङ्गविहङ्गमादिदेहोपभोग्यसुखदुःखासाधारणकारणधर्माधर्मनिकुरम्बमालोच्य तत्तत्कायव्यूहं निर्माय भोगेन पूर्वोत्पन्नधर्माधर्मयोः क्षयः निवृत्तदोषस्य धर्माधर्मान्तरानुत्पत्तावपूर्वशरीरान्तरानुत्पत्तौ पूर्वशरीरेण सहात्मनो यः संयोगाभावः स एव मोक्षः तदभाव इति अनागतशरीरानुत्पादे संयोगाभाव इत्यर्थः। नन्विदमवस्था प्रलयसाधारणीत्यत आह अप्रादुर्भाव इति यदनन्तरं शरीरादेः पुनः प्रादुर्भावो न भवतीत्यर्थः, स मोक्ष इति तस्यामवस्थायां यो दुःखध्वंसः स मोक्ष इत्यर्थः ॥ १८ ॥

* द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥ १९ ॥ *

ननु तमसोऽपि द्रव्यस्य कर्म दृश्यते चलति छायेतिप्रत्ययात् तत्र न प्रयत्नो न वा नोदनाभिघातौ न वा गुरुत्वद्रवत्वे न वा संस्कारस्तथाच निमित्तान्तरं वक्तव्यं तच्च नानुभूयमानमित्यत आह।

एतेन नैव द्रव्याणीत्यवधारणमप्युपपादितं द्रव्यनिष्पत्तिस्तावत् स्पर्शवद्द्रव्याधीना न च तमसि स्पर्शोऽनुभूयते, न चानुद्भूत एव स्पर्शः रूपोद्भवे स्पर्शोद्भवस्यावश्यकत्वात्। पृथिव्यामयं नियमः तमस्तु दशमं द्रव्यमिति चेन्न द्रव्यान्तरस्य नीलरूपानधिकरणत्वात् नीलरूपस्य च गुरुत्वनान्तरीयकत्वात् रसगन्धनान्तरीयकत्वात्। यथाकाशं शब्दमात्रविशेषगुणं तथा तमोऽपि नीलरूपमात्रविशेषगुणं स्यादिति चेन्न चाक्षुषत्वविरोधात् यदि हि नीलरूपवन्नीलं रूपमेव वा तमः स्यात् बाह्यालोकप्रग्रहमन्तरेण चक्षुषा न गृह्येत ॥ १९ ॥

* तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥ *

तर्हि गतिप्रतीतिः किन्निबन्धनेत्यत आह ।

गच्छता द्रव्यान्तरेणावृते तेजसि पूर्वदेशानुपलम्भादग्रिमदेशे चोपलम्भात्तेजोऽभावस्य गच्छद्द्रव्यसाधर्म्याद् गतिभ्रमो न तु वास्तवी तत्र गतिरित्यर्थः अन्वयव्यतिरेकाभ्यां तथा प्रतीतेः, उद्भूतरूपवद्यावत्तेजःसंसर्गाभावस्तमः ॥ २० ॥

* दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१ ॥ *

एवं द्विसूत्रकं प्रासङ्गिकं तमःप्रकरणं समाप्य कर्मशून्यताप्रकरणमाह ।

चकारादात्मसंग्रहः क्रियावता वैधर्म्यं दिगादीनाममूर्त्तत्वं मूर्त्त्यनुविधानात् क्रियायाः ॥ २१ ॥

* एतेन कर्माणि गुणाश्च व्याख्याताः ॥ २२ ॥ *

गुणकर्मणोर्निष्क्रियत्वमाह ।

एतेनेति क्रियावद्वैधर्म्येणेत्यर्थः क्रियावद्वैधर्म्यममूर्त्तत्वं गुणकर्मणोरपीति ते अपि निष्क्रियत्वेन व्याख्याते इत्यर्थः ॥ २२ ॥

* निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥ २३ ॥ *

ननु गुणकर्मणी यदि निष्क्रिये तदा ताभ्यां द्रव्यस्य कथं सम्बन्धः, संयोगसम्बन्धः सम्भाव्येत स च कर्माधीन एवेत्यत आह ।

निष्क्रियाणां गुणकर्मणां समवाय एव सम्बन्धः स च कर्मभ्यो निषिद्धः तस्य सम्बन्धस्य उत्पत्तिरेव नास्ति दूरे तु कर्माधीनतेत्यर्थः ॥ २३ ॥

* कारणन्त्वसमवायिनो गुणाः ॥ २४ ॥ *

ननु यद्यमूर्त्तत्वात् गुणाः कर्मसमवायिकारणं न भवन्ति तदा गुणैर्गुणाः कर्माणि च कथमुत्पद्यन्ते न हि समवायिकारणातिरिक्तत्वरूपेणापि कारणता संभवतीत्यत आह ।

गुणा असमवायिकारणं न तु समवायिकारणमपि येन कर्माधाराः स्युः, सा चासमवायिकारणता क्वचित् कार्य्यैकार्थसमवायात् यथात्ममनःसंयोगस्यात्मविशेषगुणेषु संयोगविभागशब्दानां शब्दे, क्वचित् कारणैकार्थसमर्थसमवायात् यथा कपालादिरूपादीनां घटादिरूपादिषु ॥ २४ ॥

* गुणैर्दिग् व्याख्याता ॥ २५ ॥ *

ननु इह कर्मोत्पद्यते इदानीं कर्मोत्पद्यते इत्यादिप्रतीतिबलात् दिक्कालावपि कर्मसमवायिकारणे एव कथमन्यथा तत्र तयोराधारतेत्यत आह ।

यथा गुरुत्वादयो गुणा न कर्मसमवायिकारणममूर्त्तत्वात् तथा दिगपि न कर्मसमवायिकारणममूर्त्तत्वादेवेत्यर्थः,, आधारता तु समवायितामन्तरेणापि, कुण्डे बदराणि, कुण्डे दधि, वने सिंहनाद इत्यादिवदुपपद्यत इति भावः ॥ २५ ॥

* कारणेन कालः ॥ २६ ॥ *

उक्तेनैवाभिप्रायेणाह ।

निष्क्रियत्वेन व्याख्यात इति परिणस्यानुषङ्गः, कारणेनेति भावप्रधानो निर्देशः तेन निमित्तकारणत्वेनाधारमात्रं कर्मणः कालो न तु समवायीत्यर्थः ॥ २६ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे पञ्चमाध्यायस्य
द्वितीयमाह्निकम् ।
समाप्तश्चायं पञ्चमाध्यायः ।

# षष्ठाध्याये प्रथमाह्निकम् ।

—००—

* बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥ *

संसारमूलकारणयोर्धर्माधर्मयोः परीक्षा षष्ठाध्यायार्थः । धर्माधर्मौ च "स्वर्गकामो यजेत" "न कलञ्जं भक्षयेत्" इत्यादिविधिनिषेधबलकल्पनीयौ विधिनिषेधवाक्ययोः प्रामाण्ये सति स्यातां, तत्प्रामाण्यञ्च वक्तुर्यथार्थवाक्यार्थज्ञानलक्षणगुणपूर्वकत्वादुपपद्यते स्वतः प्रामाण्यस्य निषेधादतः प्रथमं वेदप्रामाण्यप्रयोजकगुणसाधनमुपक्रमते ।

वाक्यकृतिर्वाक्यरचना सा बुद्धिपूर्वा वक्तृयथार्थवाक्यार्थज्ञानपूर्वा वाक्यरचनात्वात् नदीतीरे पञ्चफलानि सन्तीत्यस्मदादिवाक्यरचनावत्, वेदे इति वाक्यसमुदाय इत्यर्थः तत्र समुदायिनां वाक्यानां कृतिः पक्षः, न चास्मदादिबुद्धिपूर्वकत्वेनान्यथासिद्धिः, "स्वर्गकामो यजेत" इत्यादाविष्टसाधनतायाः कार्य्यतायाः वा अस्मदादिबुद्ध्यगोचरत्वात्, तेन स्वतन्त्रपुरुषपूर्वकत्वं वेदे सिध्यति, वेदत्वञ्च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् ॥ १ ॥

* ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥ २ ॥ *

प्रकारान्तरेण वेदवाक्यानां बुद्धिपूर्वकत्वमाह ।

ब्राह्मणमिह वेदभागस्तत्र यत् संज्ञाकर्म नामकरणं तत् व्युत्पादकस्य बुद्धिमाक्षिपति यथा लोके लम्बकर्ण- दीर्घनास- लम्बग्रीवादिनामकरणम् ॥ २ ॥

* बुद्धिपूर्वो ददातिः ॥ ३ ॥ *

प्रकारान्तरमाह ।

"स्वर्गकामो गां दद्यात्" इत्यादौ यद्दानप्रतिपादनं तद्दानेष्ट-

साधनताज्ञानजन्यं ददातिरिति धातुनिर्देशो भावार्थं दानमुपलक्ष-यति ॥ ३ ॥

* तथा प्रतिग्रहः ॥ ४ ॥ *

प्रमाणान्तरमाह ।

प्रतिग्रहप्रतिपादिका अपि श्रुतयो बुद्धिपूर्विकाः प्रतिग्रहपदं स्वविषयां श्रुतिमुपलक्षयति तेन भूम्यादिप्रतिग्रहप्रतिपादिकाः श्रुतयः प्रतिग्रहीतुः श्रेयःसाधनतापराः कृष्णसारचर्मादिप्रतिग्रहप्रतिपा-दिकाः श्रुतयः प्रतिग्रहीतुरनिष्टसाधनताबोधिकाः नचेष्टानिष्टसाधनते अर्वाचीनपुरुषबुद्धिगोचरौ भवितुमर्हतः ॥ ४ ॥

* आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ ५ ॥ *

इदानीं "शास्त्रदेशितं फलमनुष्ठातरि" इति जैमिनीयं सूत्रं संवादयन्नाह ।

आत्मान्तरगुणानां यागहिंसादिपुण्यपापानाम् आत्मान्तरे यौ सुखदुःखात्मकौ गुणौ तयोरकारणत्वात् एवञ्च प्रत्यात्मनिष्ठाभ्यामेव धर्माधर्माभ्यां सुखदुःखे न व्यधिकरणाभ्यामन्यथा येन यागहिंसादिकं न कृतं तस्य तत् फलं स्यादिति कृतहानिरकृताभ्यागमश्च प्रसज्येत, ननु नायं नियमः पुत्रेष्टिपितृयज्ञादौ व्यभिचारात् तथाहि पुत्रेण कृतस्य श्राद्धादेः पितरि फलश्रवणात् पिता च कृतायाः पुत्रेष्टेः पुत्रे फल-श्रवणात्, न च स्वर्गभागिपितृकत्वस्य तेजस्विपुत्रकत्वस्य च फलस्य पुत्रपितृगामितया सामानाधिकरण्यमेवेति वाच्यं श्रुतिविरोधात् पितृश्राद्धेः पुत्रतेजस्वितादेरेव फलस्य श्रवणात् फलान्तरस्य च गौरव-पराहतत्वात्, अस्तु तर्हि पूर्वं फलं कर्त्तरि, स्वर्गस्तु पितरीति चेन्न व्यापारस्य फलसामानाधिकरण्यनियमात् अन्यथा श्राद्धानन्तरं मुक्ते पुत्रे पितुः स्वर्गो न स्यात्, न स्यादिति चेन्न मुक्ते पितरि साङ्गादपि श्राद्धात् फलं न स्यादिति तुल्यत्वात् मैवं "शास्त्रदेशितं फलमनुष्ठा-तरि" इत्यस्यौत्सर्गिकत्वात् क्वचिद् बलवता बाधकेनापोद्यत्वात् प्रकृते च पितृपुत्रगतफलश्रवणस्यैव बाधकत्वात्, तथा सत्यतिप्रसङ्ग इति

येष्व तादृशस्मृतेरेवातिप्रसङ्गनिरासकत्वात् । यत्तु महादानादौ स्वर्गमात्रमेव फलं तत्र यदुद्देशेन क्रियते तन्नामपि फलं जनयतीति यत्तूक्तं तत्रोत्सर्गे बाधकाभावात् बाधकाभावसहितोत्सर्गस्य नियमत्वात् राजादीनामुपवासाद्यनुष्ठानानापत्तेः परद्वारैव तत्तत्कर्मणां स्वगतफलमुद्दिश्यानुष्ठानसम्भवात्, सम्यगुटहस्याम्नपरिपालनस्य ब्रह्मलोकावाप्तिरूपे च फले नियम एव प्रातिस्विकफलाभिप्रायेण तत्सर्गाभिधानात्, वृत्तिकारास्तु "शास्त्रदेशितम्" इत्यादिनियम एव पित्रादीनान्तु यत् फलं तच्छ्राद्धादौ भोजितानां ब्राह्मणानामाशीः-सम्भवानुभावात्, "कृतार्थास्ते पितरो भूयासुः" इति पितृयज्ञे पुत्रेष्टौ तु सन्तुष्टानामृत्विजामाशीर्दानात् "तेजस्वी वर्चस्व्यन्नादस्ते पुत्रो भूयात्" इत्यादेः, जाङ्गलिकमन्त्रपाठादिव सर्पदष्टस्य विषापहरणमित्याहुः ॥ ५ ॥

*** तद्दुष्टभोजने न विद्यते ॥ ६ ॥ ***

अदुष्टानां यथाशास्त्रमनुवर्त्तमानानां भोजनात्तृप्तानामाशीर्दानात् तत् फलं न तु दुष्टानां पात्रत्वेन निषिद्धानामपि कुण्डगोलकप्रभृतीनामित्याह ।

तदित्याशीर्दानफलं परामृशति दुष्टा ब्राह्मणाः पात्रानधिकारिणो यत्र श्राद्धे भोज्यन्ते तत्र पितरि तत् फलं न विद्यते न भवतीत्यर्थः श्राद्धफलमेव वा न भवति पितरीत्यर्थः ॥ ६ ॥

*** दुष्टं हिंसायाम् ॥ ७ ॥ ***

के ते दुष्टा इति दुष्टलक्षणमाह ।

हिंसायामिति निषिद्धकर्ममात्रोपलक्षणम्, तेन निषिद्धे कर्मणि प्रवृत्तं पुरुषं दुष्टं विजानीयादित्यर्थः ॥ ७ ॥

*** तस्य समभिव्याहारतो दोषः ॥ ८ ॥ ***

न केवलं दुष्टब्राह्मणस्य श्राद्धे निमन्त्रितस्य भोजनेन फलाभावः किन्तु पापमपि भवतीत्याह ।

तस्य निषिद्धे कर्मणि प्रवृत्तस्य ब्राह्मणस्य समभिव्याहारात् एक-पङ्क्तिभोजनसहशयनसहाध्ययनादिलक्षणात् दोषः पापमित्यर्थः ॥८॥

* तददुष्टे न विद्यते ॥ ९ ॥ *

तत् किमदुष्टसमभिव्याहारादपि दोष एव, नेत्याह ।

तत् पापमदुष्टे यथाशास्त्रं व्यवहरमाणे ब्राह्मणे श्राद्धे भोजिते न विद्यते न भवतीत्यर्थः ॥ ९ ॥

* पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥ *

ननु सत्पात्राप्रतिलम्भे यत्र श्राद्धदानादौ प्रथमं दुष्टा एव निमन्त्रिताः क्रमेण तु सत्पात्रप्रतिलम्भे किं विधेयमित्यत्राह ।

श्राद्धे प्रतिग्रहे वा विशिष्टा यथाशास्त्रमनुवर्त्तमाना यदि लभ्यन्ते तदा निमन्त्रितानपि निन्द्यान् परिहृत्य तानेव भोजयेत् "न निमन्त्रितान् प्रत्याचक्षीत" इति तु सत्पात्रपरम्, निन्द्यांस्तु निमन्त्रितान् दक्षिणादानादिना सन्तोषयेत् ॥ १० ॥

* समे हीने वा प्रवृत्तिः ॥ ११ ॥ *

यत्र स्वापेक्षया विशिष्टा न लभ्यन्ते श्राद्धदानादौ तत्राह ।

समे स्वसदृशे, हीने स्वापेक्षया गुणादिना न्यूने, अदुष्टे पात्रे श्राद्धदानादौ प्रवृत्तिस्तेषामेवाशीर्दानात् पितरि सुखमित्यर्थः । निषिद्धानां परं त्यागो न त्वदुष्टानां समहीनानामपीति भावः ॥ ११ ॥

* एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥ *

श्राद्धे दानादौ च सम्प्रदानतादृगुण्येन धर्मोत्पत्तिमभिधाय तादृशादपादानादपि धर्मोत्पत्तिमतिदिशति ।

यथोत्तरं धर्मोत्कर्षः, हीनादपि भूम्यादिप्रतिग्रहे, समादपि, स्वापेक्षया विशिष्टादपि, धार्मिकात् धर्मं इत्यर्थः रपस्वादानं परस्मात् स्वस्य धनस्वादानं प्रतिग्रहः । वृत्तिकारास्तु परस्वादानं चौर्यादिना

परस्वग्रहणं व्याख्यातं तथाच स्मृतिः "शूद्रात् सप्तमे वैश्याद्दशमे क्षत्रियात् पञ्चदशे ब्राह्मणात् प्राणसंशये" इति, क्षुधापीडितमात्मानं कुटुम्बं वा रक्षितुं सप्त दिनान्याहारमप्राप्य शूद्रभक्ष्यापहारः कार्यः, एवं दश दिनान्याहारमप्राप्य वैश्यात्, पञ्चदश दिनान्याहारमप्राप्य क्षत्रियात्, प्राणसंशये ब्राह्मणात् भक्ष्यापहरणं न दोषायेत्याहुः ॥१२॥

* तथा विरुद्धानां त्यागः ॥ १३ ॥ *

न केवलं प्राणसंशये परस्वादानं न निषिद्धं किन्तु तस्यां दशाया-मपहर्तुं ये न प्रयच्छन्ति तेषां वधोऽपि कार्यो न तावता धर्महानि-रधर्मप्रादुर्भावो वेत्याह ।

तस्यां दशायां विरुद्धानां विपरीतमाचरतां त्यागो वधः कार्य्य इत्यर्थः । तदुक्तम्,

"कर्मणा येन केनापि मृदुना दारुणेन वा ।

उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्" इति ॥ १३ ॥

* हीने परे त्यागः ॥ १४ ॥ *

ननु चाविशेषेणैव परस्य वधः, नेत्याह ।

यदि स्वस्माद्धीनः परो भवति योऽपहर्तुं न ददाति तस्य शूद्रादेस्त्यागो वधः ॥ १४ ॥

* समे आत्मत्यागः परत्यागो वा ॥ १५ ॥ *

सममधिकृत्याह ।

यदि स्वसदृशो ब्राह्मण एव विरोधी भवति तदात्मन एवोपवा-सादिना त्यागोऽप्रमादः कर्त्तव्यः, यदि स्वस्य कुटुम्बस्य वा रक्षाप्रकारो न दृश्यते विरोधी च समो भवति तदा तस्यैव त्यागो वध इत्यर्थः ॥ १५ ॥

* विशिष्टे आत्मत्याग इति ॥ १६ ॥ *

तत् किं स्वामेच्छया यदि विशिष्टो भवति विरोधी तदा तस्यापि वध एव कार्य्यः, नेत्याह ।

स्वापेक्षया विशिष्टे वेदाध्ययनादिना उत्कृष्टे विरोधिनि स्वात्मन एव त्यागो विधेयः प्राणसंशये सत्यप्यात्ममरणमेवाभिप्रेयात् न तु ब्राह्मणं हन्यादित्यर्थः। इतिराह्निकपरिसमाप्तौ ॥ ॥ १६ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे षष्ठाध्यायस्य प्रथममाह्निकम्।

---

## द्वितीयाह्निकम्।

—००—

* दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥ *

एवं पूर्वाह्निके वैदिकी प्रमा गुणजन्येति तदुत्पत्तौ गुणाभिधानम्, "शास्त्रदेशितं फलमनुष्ठातरि" इति विवेचनम्, निषिद्धाचरणेऽपि प्रत्यवायाद्युत्पत्तिः कस्याश्चिद्दशायामित्यस्य विवेचनञ्च वृत्तमधुना "यतोऽभ्युदयनिःश्रेयससिद्धिः" इति द्वितीयं सूत्रं व्याचिख्यासुर्विशेषतोधर्मोत्पत्तिपरीक्षायां वर्त्तिष्यमाणायामाह।

दृष्टप्रयोजनानि कृषिवाणिज्यराजसेवादीनि, अदृष्टप्रयोजनानि यागदानब्रह्मचर्य्यादीनि, एतेषां कर्मणां मध्ये यत्र दृष्टं प्रयोजनं नोपलभ्यते तत्रादृष्टं प्रयोजनं कल्पनीयम्, तच्चाभ्युदयाय तत्त्वज्ञानाय। यद्वा अभ्युदयायेति चतुर्थी प्रथमार्थे तेन फलमभ्युदय इत्यर्थः, अदृष्टं फलमपूर्वमेव तद् यदि योगजं तदाऽभ्युदय आत्मसाक्षात्कारः यदि यागदानादिजं तदाऽभ्युदयः स्वर्गः, तत्रापि यथा दोग्धि पचतीत्यादिक्रिया सद्यःफलिका, वपति कर्षतीत्यादिक्रिया च विलम्बभाविफला, तथा यजति ददाति ब्रह्मचर्य्यं चरतीत्यादिक्रिया तावत् सद्यःफलिका न भवति तादृशस्य फलस्यानुपलब्धेः। न च धार्मिकतया

स्नानाल्लाभादिकमेव फलम्, प्रच्छन्नं ब्रह्मचर्य्यादि चरतां तत्फलानुद्देशात् तस्माच्चिरभाविस्वर्गादिकमेव फलं तच्चाशुतरविनाशिन्याः क्रियाया न साक्षादित्यान्तरालिकं क्रियाफलयोः समानाधिकरणमपूर्वं पर्य्यवस्यति ॥ १ ॥

* अभिषेचनोपवासब्रह्मचर्य्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥ *

अदृष्टफलानि कर्माणि परिसङ्ख्ष्टे ।

अदृष्टायेत्यदृष्टलक्षणाय फलाय अदृष्टद्वारा स्वर्गापवर्गलक्षणाय फलाय वा एतेनादृष्टफलकर्मोतस्मात्तं सकलकर्मोपसंग्रहः, तत्राभिषेचनं स्नानं "गङ्गायां स्नायात्" इत्यादिविधिविधेयम्, उपवासः "एकादशीमुपवसेत्" इत्यादिविधिविधेयः, ब्रह्मचर्य्यं सामान्यत एव धर्मसाधनम्, गुरुकुलवासो ब्रह्मचारिणां वेदाध्ययनमहानाम्न्यादिव्रतार्थः, वानप्रस्थं वयःपरिणामे वनं प्रस्थितानां यत् कर्म, यज्ञो राजसूयवाजपेयादिः" दानं "गां दद्यात्" इत्यादिविधिविधेयम्, प्रोक्षणं "व्रीहीन् प्रोक्षति" इत्यादिविधिविधेयम्, दिक् "प्राचीनप्रवणे यजेत" "प्राङ्मुखोऽन्नादि भुञ्जीत" इत्यादिविधिविधेया, नक्षत्रं आर्द्रादौ मघादि, मन्त्रः आपोहिष्ठेत्यादिः, कालः "मासि मासि वोऽशनम्" "अमावास्यायामपराह्णे दद्यात्" "ग्रीष्मे पञ्चतपाः" "वसन्तेऽग्नीनादधीत" इत्यादिविधिविधेयः, नियमो वर्णाश्रमिणां यथाशास्त्रमनुष्ठानम्, तदेवं धर्मस्य आत्मा समवायिकारणम्, आत्ममनःसंयोगोऽसमवायिकारणम्, श्रद्धा स्वर्गादिलक्षणप्रयोजनज्ञानञ्च निमित्तकारणमनुसन्धेयम् ॥ २ ॥

* चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥ *

एवं धर्मसाधनमभिधाय अधर्मसाधनमपि सङ्क्षिप्याह ।

चतुर्णामाश्रमाणां समानं यद्धर्मसाधनं तत्तावत् पूर्वसूत्रे एवोक्तमिति शेषः । उपधाः भावस्य श्रद्धाया दोषाः अनुपधाः श्रद्धाया भाव-

ष्टादोषाः तेऽपि धर्माधर्मयोः साधनानि यथाक्रमं ग्रहणीयानि उपधा-पदेनाधर्मसाधनानि सर्वाण्युपसंगृहीतानि ॥ ३ ॥

* भावदोष उपधाऽदोषोऽनुपधा ॥ ४ ॥ *

उपधानुपधे लक्षणतो विवेचयन्नाह ।

भावः इच्छा रागः प्रमादोऽश्रद्धा मदमानासूयाप्रभृतयो भाव-दोषा उपधापदेनोच्यन्ते, श्रद्धा मनःप्रसादो दर्शितकर्मानुष्ठानाध्यवसाय इतिकर्त्तव्यतापरिच्छेदश्चानुपधा, तदेतयोर्धर्माधर्मनिमित्तकारणत्व-मुक्तम् ॥ ४ ॥

* यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च त-च्छुचि ॥ ५ ॥ *

शुच्यशुचिनी चोपधानुपधे तत्र शुच्यशुचिनी विवेचयति ।

इष्टं श्रुत्या स्मृत्या च यद्रूपादिकं विहितं यस्य द्रव्यस्य तत्तया तत्र रूपम् "अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति" "श्वेतं छागलमालभेत" इत्यादौ, प्रोक्षितं मन्त्रेणोदकसिक्तम्, अभ्यु-क्षितं विना मन्त्रमुदकसिक्तं चकाराच्न्यायतो लब्धं तच्च "याजनाध्या-पनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इत्यादिनियमविधिबोधितम्" ॥५॥

* अशुचीति शुचिप्रतिषेधः ॥ ६ ॥ *

अशुचिलक्षणमाह ।

यद्द्रव्यं शुचि तद्विपरीतमशुचीत्यर्थः अप्रशस्तरूपरसगन्धस्पर्श-ममन्त्रप्रोक्षितमनभ्युक्षितं निषिद्धजलाभ्युक्षितं वा अन्यायागतम्, अपि वाऽन्यायागतं ब्राह्मणस्य द्रव्यमशुचीत्यर्थः ॥ ६ ॥

* अर्थान्तरञ्च ॥ ७ ॥ *

अशुच्यन्तरमाह ।

प्रशस्तरूपरसगन्धस्पर्शमपि प्रोक्षितमभ्युक्षितं न्यायार्जितञ्च यत्तत्रापि वाग्दुष्टं भावदुष्टञ्च यत्तदप्यशुचीत्यर्थः ॥ ७ ॥

* अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावात् विद्यते वाऽर्थान्तरत्वाद् यमस्य ॥ ८ ॥ *

इदानीं धर्माधर्मौ प्रति सहकार्य्यन्तरमाह ।

अयतस्य यमरहितस्यासंयतस्येति यावत् "हस्तौ पादौ प्रक्षाल्याचम्य वाग्यतो भुञ्जीत भोक्ष्यमाणः प्रयतोऽपि द्विराचामेत्" इत्यादिबोधितयमरहितस्य भोजनं नाभ्युदयाय किन्तु पापाय, कुत एवमित्यत आह नियमाभावात् नियमस्य सहकारिणोऽभावात्, नियमे सति यत्तदाह विद्यते वा यथोक्तयमसाहित्येन भोजने भवत्येवाभ्युदयः, कुत इत्यत आह अर्थान्तरत्वाद्यमस्य भोजनादर्थान्तरं यतो यमः, तथाच सहकारिकारणं विना न फलसिद्धिस्तस्मिन् सति फलसिद्धिरित्यर्थः ॥ ८ ॥

* असति चाभावात् ॥ ९ ॥ *

ननु यममात्रमेव तन्त्रं तर्हि भोजनमतन्त्रमेवेत्यत आह ।

यमे सत्यपि शुचिभोजनेऽसति अभावादभ्युदयस्येति शेषः. तथाच यमो भोजनञ्च द्वयमेव पुण्यकारणमित्यर्थः । भोजनमित्युपलक्षणं यागदानस्नानहोमादीनामपि श्रौतस्मार्त्तकर्मणां यमनियमौ सहकारिणौ ॥ ९ ॥

* सुखाद्रागः ॥ १० ॥ *

एवं धर्माधर्मप्रादुर्भावं प्रति यमसहकारिणमभिधाय दोषं सहकारिणमभिधातुं दोषनिदानमाह ।

स्रक्चन्दनवनितादिविषयसेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा राग इच्छा संजायते अहिकण्टकादिजन्मनो दुःखात् तत्र तत्साधने वा द्वेष इत्यपि द्रष्टव्यम्, रागद्वेषमोहाः प्रवर्त्तकत्वेन दोषा इत्यभिधीयन्ते तथाच गौतमीयं सूत्रम् "प्रवर्त्तनालक्षणा दोषाः" इति ॥ १० ॥

* तन्मयत्वाच्च ॥ ११ ॥ *

ननु सुखदुःखे एव यदि रागद्वेषौ जनयतः तदा तयोर्नाशे कथं तौ स्यातामत आह ।

रागद्वेषौ भवत इति शेषः विषयाभ्यासजनितो दृढतरः संस्कारविशेषस्तन्मयत्वं यद्वशात् कामातुरस्य कामिनीमलभमानस्य सर्वत्र कामिनीदर्शनम्, एकदा भुजङ्गदष्टस्य तत्र दृढतरसंस्कारतः सर्वत्र भुजङ्गदर्शनम्, तदुक्तं "तन्मयत्वं तत्प्रकाशो बाह्याभ्यन्तरतस्तथा" इति ॥ ११ ॥

* अदृष्टाच्च ॥ १२ ॥ *

हेत्वन्तरं समुच्चिनोति ।

रागद्वेषाविति शेषः यद्यप्यदृष्टं साधारणकारणं तथापि क्वचित्तौ प्रति असाधारणतामप्यनुभजति यथा तज्जन्माननुभूतकामिनीसुखस्यापि यौवनोद्भेदे कामिनीरागः अननुभूतभुजङ्गदंशदुःखानामपि भुजङ्गेषु द्वेष इत्याद्यूह्यम् । न च प्राग्भवीयः संस्कार एवात्र निबन्धनम्, तत्कल्पने तदुद्बोधकल्पने च प्रमाणाभावात् अदृष्टस्यावश्यकल्पनीयत्वात् ॥ १२ ॥

* जातिविशेषाच्च ॥ १३ ॥ *

सहकार्यन्तरमाह ।

तथाहि मनुष्यजातीयानामन्नादौ रागः मृगजातीयानां तृणादौ, करभजातीयानां कण्टकादौ, तत्रापि तत्तज्जातिनिष्पादकमदृष्टमेव तन्त्रं द्वारमात्रन्तु जातिर्जन्मविशेषः एवं पारावतादीनामुत्करे रागः । तथा महिषजातीयानां तुरङ्गमे द्वेषः, सारमेयाणां शृगाले, नकुलानां भुजङ्गमे इत्याद्यूह्यम् ॥ १३ ॥

* इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १४ ॥ *

एवं धर्माधर्मनिमित्ततया रागद्वेषनिमित्तानि परिसङ्ख्याय सम्प्रति दोषाणां धर्माधर्मकारणत्वं प्रवृत्तिद्वारेत्याह ।

विहिते कर्मणि रागनिबन्धना निषिद्धे कर्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः, रागनिबन्धना यागादौ प्रवृत्तिर्धर्मं प्रसूते द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्मम् । तावेतौ रागद्वेषौ संसारमनुवर्त्तयतः तथाच गौतमीयं सूत्रम् "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" इति वागारम्भो वाचिकी प्रवृत्तिः सत्यं प्रियं हितमिति पुण्या, असत्यमप्रियमहितमिति पापा, बुद्धिः बुध्यते ज्ञायतेऽनेनेति मन उच्यते तेन मानसी प्रवृत्तिर्भूतदयादिः, शारीरी प्रवृत्तिर्दानं परिचरणमित्यादिका दशविधा पापा दशविधा पुण्या चेति ॥ १४ ॥

## * तत्संयोगो विभागः ॥ १५ ॥ *

इदानीं धर्माधर्मयोः प्रयोजनं प्रत्यभावमाह ।

ताभ्यां धर्माधर्माभ्यां संयोगो जन्म अपूर्वाभिः शरीरेन्द्रियवेदनाभिः सम्बन्धः संयोग इत्योच्यते । विभागस्तु शरीरमनोविभागो मरणलक्षणः तथाचायं जन्ममरणप्रबन्धः संसारः प्रेत्यभावापरनामा धर्माधर्माभ्यामित्यर्थः अस्यैव च प्रेत्यभावस्यान्तरशरीरभाव इति वैदिकी संज्ञा ॥ १५ ॥

## * आत्मकर्मसु मोक्षो व्याख्यातः ॥ १६ ॥ *

तदेतस्य प्रेत्यभावस्य जन्ममरणप्रबन्धस्य यत्र च पर्य्यवसानं तं मोक्षं निरूपयितुमाह ।

अयमेव शरीरमनोविभागः आत्मकर्मसु सत्सु मोक्षो भवतीत्यर्थः तत्रात्मकर्माणि तावत् श्रवणं मननं योगाभ्यासो निदिध्यासनमासनं प्राणायामः शमदमसम्पत्तिः आत्मपरात्मसाक्षात्कारो देहदेशान्तरोपभोग्यपूर्वोत्पन्नधर्माधर्मपरिज्ञानं तदुभोगानुरूपनानादेहनिर्माणं तयोर्भोगेन प्रक्षयो रागद्वेषलक्षणदोषप्रशान्तदमादियमधर्माधर्मयोरनुत्प-

दात् प्रवृत्त्यपाये जन्मापायाद्दुःखापायलक्षणोऽपवर्गस्तत्र षट्पदार्थीयतत्त्वज्ञानसाध्यमात्मकर्म ॥ १६ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे षष्ठाध्यायस्य
द्वितीयमाह्निकम् ।
समाप्तश्चायं षष्ठाध्यायः ।

---

## सप्तमाध्याये प्रथमाह्निकम् ।

* उक्ता गुणाः ॥ १ ॥ *

संसारमूलकारणतया सर्वोत्पत्तिमन्निमित्तकारणतया भोगसाधनतया चोत्पत्तितः प्रत्यात्मनियतत्वेन परादृष्टस्यापि परस्योपयोगित्वेन च धर्माधर्मौ परीक्ष्येदानीं गुणान् परीक्षिषुस्तेषामुद्देशं लक्षणञ्च स्मारयन्नाह ।

उद्दिष्टा लक्षिता गुणाश्चेत्यर्थः तत्र रूपादयः सप्तदश कण्ठरवेणोक्ताः चशब्दसमुच्चिताः सप्त, तेन चतुर्विंशतिरपि गुणा उक्ताः, तत्र नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा असमवायिकारणवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा कार्य्यासमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा ॥ १ ॥

* पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥ *

तत्र गुणत्वेन गुणपरीक्षा सप्तमाध्यायार्थः । तत्र प्रथमाह्निके नित्यतया गुणपरीक्षा, अनित्यतया गुणपरीक्षा, पाकजगुणपरीक्षा,

सङ्ख्याद्यनेकवृत्तिगुणपरीक्षा, परिमाणपरीक्षा चेति पञ्च प्रकरणानि, तत्र रूपादीनाञ्चतुर्णामनित्यत्वमाह ।

पृथिव्यादीनां वाय्वन्तानामवयविनां रूपादयश्चत्वारो गुणा अनित्याः । यद्यप्यन्येऽपि गुणा अवयविषु वर्त्तमाना अनित्या एव, तथापि तेषामन्यतोऽपि विनाशः, रूपादयश्चत्वारो गुणा आश्रयनाशादेव नश्यन्ति न तु विरोधिगुणान्तरात्, द्रव्यानित्यत्वादिति द्रव्यस्याश्रयभूतस्यानित्यत्वादाश्रितानामनित्यत्वमित्यर्थः ॥ २ ॥

* एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥ *

रूपादीनामनित्यत्वे यद्याश्रयानित्यत्वं तन्त्रं तदा नित्याश्रयवर्तीनां नित्यत्वमित्याक्षेपबललभ्यमित्याह ।

रूपादीनामेव चतुर्णां नित्येष्वाश्रयेषु वर्त्तमानानां नित्यत्वमुक्तम् एतेनेति आश्रयानित्यत्वेनानित्यत्वाभिधानेनेत्यर्थः । वृत्तिकृतस्तु नित्येष्वनित्यत्वमुक्तमित्यकारप्रश्लेषस्तया च पार्थिवपरमाणुष्वग्निसंयोगान्नाश इति व्याचक्षुः ॥ ३ ॥

* अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥ ४ ॥ *

तत् किं पार्थिवेऽपि नित्यवृत्तिरूपादीनां नित्यत्वमेवेत्यतो विवि-नक्ति ।

आप्यपरमाणौ रूपरसस्पर्शा नित्याः, तैजसपरमाणौ रूपस्पर्शौ, वायुपरमाणौ स्पर्शो नित्यः, ननु नित्येऽपि वर्त्तमानानां रूपादीनामनित्यत्वे को विरोधः शब्दबुद्ध्यादीनामिवेत्यतश्चकारेण गुणान्तराप्रादुर्भावो हेत्वन्तरं सूचितम्, शब्दे हि तीव्रमन्दादिभावेन गुणान्तरप्रादुर्भावोऽनुभूयते, ज्ञानादौ च ज्ञानादिविरोधी संस्कारादिः, आप्यतैजसवायवीयपरमाणुषु रूपादिविरोधिगुणान्तरं न प्रादुर्भवति, यदि प्रादुर्भवेत्तदा तदारब्धेष्वपि द्व्यणुकादिक्रमेणाप्याद्यवयविष्वपि पूर्वविजातीयं रूपाद्यनुभूयेत नहि शुक्लरूपविजातीयं रूपं तोयतेजसोर्वा शीतोष्णस्पर्शविजातीयौ स्पर्शौ, उष्णं जलं शीतो वायुरित्यादि प्रतीतिस्तूपाधिनिबन्धनेति भावः ॥ ४ ॥

* अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥ *

पूर्वं पृथिवीमन्तर्भाव्यानित्येष्वनित्या इत्युक्तमिदानीमाप्यादिष्वे-वाह ।

अवाद्यवयविरूपादय आश्रयनाशादेव नश्यन्ति न तु विरोधिगुणा-न्तरादपीत्यर्थः ॥ ५ ॥

* कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥ *

ननु पृथिव्यामवयविरूपायामपि रूपादयोऽग्निसंयोगादेवोत्प-द्यन्ते नश्यन्ति च, तत् कथमाश्रयनाशमात्रनाश्या इत्यत आह ।

पाकजा इति रूपरसगन्धस्पर्शा इत्यर्थः कारणगुणपूर्वका इति रूपाश्रयस्य घटादेर्यत् समवायिकारणं कपालादि तद्गुणपूर्वकाः तथाच कपालरूपं कारणैकार्थसमवायप्रत्यासत्त्या घटरूपाद्यसमवायि-कारणम्, एवं रसादावपि, रूपरसगन्धस्पर्शाः रूपत्वादिगुणत्वसाक्षा-द्व्याप्यजातिमन्तः । ननु चक्षुर्ग्राह्यत्वमेव रूपत्वमुपाधिरिति चेत् इन्द्रियमात्रमात्रेण रूपमिति प्रत्ययानुदयप्रसङ्गात् अननुसंहितोपा-ध्येरुपहितप्रत्ययायोगादिति उपाधिश्चात्र चक्षुस्तच्चातीन्द्रियं ग्राह्यत्वञ्च ग्रहणविषयत्वं तदप्यचाक्षुषं रूपत्वविशिष्टप्रतीतेश्च चाक्षुषत्वात्, चक्षु-र्मात्रबहिरिन्द्रियग्राह्यगुणत्वं रूपत्वम्, अतीन्द्रियरूपाव्याप्तिरिति चेन्न चक्षुर्मात्रबहिरिन्द्रियग्राह्यजातिमत्त्वस्य विवक्षितत्वात् तादृशी च जातिरूपत्वं नीलत्वादिका चेति । नन्वेकैका एव नीलपीतादि-व्यक्तयो नित्या न तु तत्र नीलत्वादिजातय एकव्यक्तिकत्वादिति चेन्न नीलतरनीलतमादिप्रत्ययानुदयप्रसङ्गात्. धावल्यादिसम्भेदाभावकृत-स्तत्र तारतम्यव्यवहार इति चेन्न प्रमाणाभावात् श्यामं रूपं नष्टं रक्तमुत्पन्नमिति प्रतीतेश्च, न च सा समवायोत्पत्तिविनाशकतेति वाच्यं समवायस्य तत्रानुल्लेखात् तस्य नित्यत्वाच्च घटादेरप्यनित्यतायामेवं सत्याश्वासापत्तेः समवायानित्यत्वेनैव तत्राप्यन्यथासिद्धेः सुवचत्वात्, ननु नीलपीतादयो गुणा द्रव्याभिन्ना एव धर्मधर्मिणोरभेदादिति चेन्न

रूपं घटः स्पर्शो घट इत्यादिव्यवहारप्रसङ्गात्, ननु नेदमनिष्टं यतो भवत्येव शुक्लः पटो नीलः पट इत्यादिप्रतीतिरिति चेन्न मतुब्लोपा-दभेदोपचाराद्वा प्रतीत्युपपत्तेः, भेदे प्रमाणे सति कल्पनेयं यथाकथ-ञ्चिदुपपद्यते इति चेन्न चन्दनस्य रूपं चन्दनस्य गन्ध इत्यादिव्यपदेश-बलाद्भेदसिद्धेः पटस्य रूपाभेदे पटवद्रूपमपि त्वगिन्द्रियेण गृह्येत पटमानयेत्युक्ते यत्किञ्चिद्रूपमानयेत् रूपमानयेत्युक्ते यत्किञ्चिद्द्रव्य-मानयेत्, अस्तु तर्हि भेदाभेदः अत्यन्तभेदेऽत्यन्ताभेदे च सामानाधि-करण्यानुपपत्तेरिति चेन्न अवच्छेदभेदं विना विरुद्धयोर्भेदाभेदयोरेक-त्रासम्भवात्, अन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति नित्याभाववृत्तिधर्म-त्वादत्यन्ताभावत्ववदिति चेन्न एकत्र संयोगतदत्यन्ताभावयोः प्रतीति-बलादत्यन्ताभावस्याव्याप्यवृत्तित्वाभ्युपगमात् अन्योन्याभावे तु तथा-प्रतीतेरभावात् । तदेतद्रूपं पृथिव्या नानाप्रकारकम्, पार्थिवे तेजसि च शुक्लमेव, क्वचित् पटादौ च चित्रमपि रूपमधिकम् अन्यथा तद-चाक्षुषत्वापातात् रूपवत एव चाक्षुषद्रव्यत्वात् न च विजातीयरूपै-रूपानारम्भः, नीलपीतादीनामारम्भे रूपत्वेनैव साजात्यस्यापेक्षित-त्वात् अन्यथा तदचाक्षुषत्वापत्तेरुक्तत्वात् न चावयवरूपोपग्रहेणैवा-वयविग्रहः अवयवानामपि चित्रतया नीरूपत्वप्रसङ्गात् यत्र वा पाकात् परमाणुषु चित्रं रूपं तत्रैव तत्परम्परारब्धपटादौ चित्ररूपो-पत्तेः, न च हरीतक्यां रसोऽपि चित्र इति वाच्यं हरीतक्या नीरस-त्वेऽपि दोषाभावात्, षड्रसत्वव्यवहारस्तु तत्तद्रसगुणकारितया । एवं गन्धोऽपि न चित्रः सौरभासौरभवदवयवद्वयस्यानारम्भकत्वात्, कर्क-ट्यादौ क्वचिदवयवे तैक्त्यं क्वचिन्माधुर्यं तथाच कतमो रसः कर्कट्या-मिति चेन्माधुर्यमेव, गुणविरोधेन कथं तथा स्यादिति चेत् तदवयवे तैक्त्याभावात्, तथाऽनुभवः कथमिति चेत् कर्कटीभक्षणक्षुभितरसनाग्र-वर्त्तिपित्तद्रव्यस्य तिक्ततोपलम्भात् तत एव कदाचिन्मुखमपि तिक्तायते, हरीतक्यामपि कथमियं न गतिरिति चेन्न तदवयवेषु कषायमाधुर्य-लवणादिनानारसानुभवादित्यलं पल्लवेन । तच्च रूपं नयनसहकारि, नन्वेवं वायौ रूपाभावस्य तमसश्च कथं चाक्षुषतेति चेन्न भावग्रह एव

रूपस्य नयनसहकारित्वात् विषयालोकचक्षुषां त्रयाणामपि रूपाणि चाक्षुषप्रतीतिप्रयोजकानि । रसोऽपि रसत्वजातिमान् रसत्वं रसनेन्द्रियमात्रजन्यसाक्षात्कारविषयजातिः तादृशजातिमत्त्वञ्च रसत्वं सोऽयं जीवनपुष्टिबलारोग्यहेतुः रसनसहकारी, रसनेन्द्रियग्राह्यगुणत्वव्याप्यजातिमत्त्वं रसत्वं तथा सति नातीन्द्रियरसाव्याप्तिः । घ्राणमात्रग्राह्यो गुणो गन्धः घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वं गन्धत्वं स च सुरभिरसुरभिश्चेति द्विविधः, यद्वा पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं गन्धत्वम् । एवं स्पर्शोऽपि स्पर्शत्वजातिमान् गुणः त्वगिन्द्रियमात्रग्राह्यगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं स्पर्शत्वं द्रव्यचतुष्टयवृत्तिश्चायम् अनुष्णाशीतशीतोष्णभेदात् त्रिविधः । इदानीं प्रसङ्गात् पाकजप्रक्रिया चिन्त्यते । तत्र कार्य्यकारणसमुदाय एव पच्यते इति पिठरपाकवादिनः, पीलवः परमाणव एव स्वतन्त्राः पच्यन्ते तत्रैव पूर्वरूपनाशाग्रिमरूपाद्युत्पत्तिः कारणगुणप्रक्रमेण चावयविनि रूपाद्युत्पद्यते इति पीलुपाकवादिनः, अत्रेदं तत्त्वम् आपाके निःक्षिप्तस्य घटादेरामद्रव्यस्य वह्निना नोदनादभिघाताद्वा तदारम्भकेषु परमाणुषु द्रव्यारम्भकसंयोगविरोधिविभागेनारम्भसंयोगनाशे द्रव्यनाशावश्यम्भावात्, दृश्यते हि स्थाल्यामाहितानां तण्डुलादीनामप्यधःसन्तापनमात्रेण भर्जनात्तदानीमेव नाशः, क्षीरनीरादीनाञ्चात्यन्तमुल्वणता, तथाचापाके वह्निज्वालाजालाभिहतानां द्रव्याणामवस्थानमिति महती प्रत्याशा, किञ्च यदि द्रव्यानाशस्तदा मध्यभागे पाकानुपपत्तिः न हि दृढतरावयवान्तरावरुद्धे मध्यभागे तेजःसंयोगसम्भावना येन तत्र श्यामादिनिवृत्तिः स्यात्, तथाच श्यामा अवयवाः अवयवी च रक्त इति महद्वैशसम् । ननु सच्छिद्राण्येवावयविद्रव्याणि कथमन्यथा कुम्भादावन्तर्निहितानां तैलघृतादीनां स्यन्दनं स्रवणञ्च, तथाच मध्यभागेऽपि तेजःसंयोगः स्यादेवेति चेन्न मूर्त्तानां समानदेशताविरोधात् अवयवान्तरसंयुक्ते मध्यभागे तेजःसंयोगासम्भवात् । ननु यदि द्रव्यनाशः कथं तर्हि स एवायं घट इति प्रत्यभिज्ञा, कथं वा सर्वास्ववस्थासु आपाकादौ घटादेस्तादृशस्यैव

दर्शनं, घटादेरुपरि निहितानां शरावोदञ्चनादीनां तथैव दर्शनं घटादिस्फुटने हि तेषां पातः स्यात्, कथं वा यावन्त एवापाके निहितास्तावन्त एव पुनः प्राप्यन्ते परमाणुभिर्द्व्यणुकादिप्रक्रमेण न्यूनानानधिकानां वा तदानीमारम्भसम्भवात्, कथं वा तावत्परिमाणान्येव घटादीन्यापाकोत्तीर्णान्युपलभ्यन्ते, रेखोपरेखादिचिह्नविलोपो वा कथं न भवेत् तथाचावयविन्येव पाक इति चेत् मैवं सूक्ष्मरूपेण घटादौ त्रिचतुरत्रसरेणुविभागे सति द्रव्यारम्भकसंयोगनाशे द्रव्यनाशे सर्वासामनुपपत्तीनामुभयसमाधेयत्वात् न हि तत्र द्रव्यं न नश्यतीति पिठरपाकवादिनोऽपि वक्तुमुत्सहन्ते । तत्रापि घटादयो न नश्यन्ति कतिपयावयवनाशेऽप्यवशिष्टावयवमाश्रित्य कार्य्यावस्थानसम्भवादन्यथा प्रत्यभिज्ञानाद्यनुपपत्तिरेवेति मीमांसकाः, ते तु तावदवयवावस्थानयोग्यस्य घटादेः स्वल्पेष्ववयवेषु कथं वृत्तिः स्यादिति प्रष्टव्याः, अविनष्ट एव पटे परिमाणसङ्कोचवदेतदुपपत्स्यते इति तेषामुत्तरमिति चेन्न कठिनतरावयवानां काष्ठपाषाणस्तम्भकुम्भादीनां सङ्कोचविकाशयोरदर्शनात्, घटादिनाशकाभिमतेन तत्परिमाणमेव नश्यतीति चेन्न परिमाणस्याश्रयनाशैकनाश्यत्वात् घटादिप्रत्यभिज्ञानवत् सूचीदलनस्थले परिमाणस्यापि प्रत्यभिज्ञायमानत्वात् त्वन्मते तन्नाशस्याप्यनुपपत्तेरिति दिक् । येषां मते द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी तदप्रतिद्वन्द्वी च विभाग एकयैवावयवक्रियया जन्यते तेषां द्व्यणुकनाशमारभ्य नवमक्षणे द्व्यणुकान्तरे रक्ताद्युत्पत्तिरेकस्मिन्नेव परमाणौ क्रियाचिन्तनात् तथाहि वह्निना नोदनात् द्व्यणुकारम्भके परमाणौ कर्म ततो विभागस्ततो द्रव्यारम्भकसंयोगनाशस्ततो द्व्यणुकनाशः नष्टे द्व्यणुके केवले परमाणावग्निसंयोगाच्छ्यामादिनिवृत्तिः श्यामादौ निवृत्ते अन्यस्मादग्निसंयोगाद्रक्ताद्युत्पत्तिः रक्तादावुत्पन्ने परमाणुक्रियानिवृत्तिस्तदनन्तरमदृष्टवदात्मसंयोगात् परमाणौ कर्म ततो विभागस्ततः पूर्वसंयोगनिवृत्तिस्ततः परमाण्वन्तरेण द्रव्यारम्भकः संयोगस्ततो द्व्यणुकोत्पत्तिरुत्पन्ने द्व्यणुके कारणगुणप्रक्रमेण रक्ताद्युत्पत्तिरिति नव क्षणाः यदि पूर्वक्रियानिवृत्तिक्षण एव क्रियान्तरमुत्पद्यते तदा, यदि तु

पूर्वक्रियानिवृत्त्यनन्तरकाले क्रियान्तरमुत्पद्यते तदा दश क्षणाः, विभागजविभागाद्युपगमेऽपि यदि द्रव्यारम्भकसंयोगनाशविशिष्टं कालमपेक्ष्य विभागजो विभागस्तदा दश क्षणा यदि तु द्रव्यनाशविशिष्टं कालमपेक्ष्य विभागेन विभागान्तरं जन्यते तदैकादशक्षणा प्रक्रिया, तथाहि द्व्यणुकनाशविभागजविभागावित्येकः कालः, ततः पूर्वसंयोगनाशश्यामादिनिवृत्ती, उत्तरसंयोगरक्ताद्युत्पत्ती, उत्तरसंयोगेन विभागजविभागक्रियानिवृत्ती, ततो द्रव्यारम्भानुगुणा परमाणुक्रिया, क्रियातो विभागो विभागात् पूर्वसंयोगनिवृत्तिस्ततो द्रव्यारम्भकः संयोगस्ततो द्रव्योत्पत्तिः, उत्पन्ने द्रव्ये रक्ताद्युत्पत्तिरिति दश क्षणाः, यदा तु द्रव्यविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागो जन्यते तदैकक्षणवृद्ध्या एकादश क्षणाः तथाहि द्रव्यविनाशस्ततो विभागजविभागश्यामादिनिवृत्ती तत उत्तरसंयोगरक्ताद्युत्पत्ती ततो विभागजविभागकर्मणोनिवृत्तिस्ततः परमाणौ द्रव्यारम्भानुगुणा क्रिया ततो विभागः पूर्वसंयोगनिवृत्तिः द्रव्यारम्भकसंयोगोत्पत्तिः द्व्यणुकोत्पत्तिः रक्ताद्युत्पत्तिश्चेत्येकादश क्षणा एकस्मिन्नेव परमाणौ क्रियाक्रियोपरमचिन्तनादेवम्, परमाण्वन्तरे यदि द्रव्यारम्भानुगुणा क्रिया चिन्त्यते तदा द्व्यणुकविनाशमारभ्य पञ्चमे षष्ठे सप्तमेऽष्टमे वा रक्ताद्युत्पत्तिरूहनीया विस्तरस्तु तत् कणादरहस्ये ॥ ६ ॥

## * एकद्रव्यत्वात् ॥ ७ ॥ *

पार्थिवपरमाणुरूपादीनां तेजःसंयोगासमवायिकारणकत्वं साधयितुमाह ।

पाकजानामिति शेषः, अत्र च गुरुत्वे कार्यत्वे सतीति विवक्षितं तदयं प्रयोगः पार्थिवपरमाणुरूपादयः संयोगासमवायिकारणकाः कार्यगुणत्वे सति नित्यविशेषद्विष्ठगुणत्वात् शब्दवत् बुद्ध्यादिवच्च, संयोगजत्वमात्रं वा साध्यं तेन विभागजशब्दे न व्यभिचारः वायुसंयोगस्य गन्धमात्रे निमित्तकारणत्वात्, पार्थिवरूपादीनाञ्च

तेजोऽन्वयव्यतिरेकदर्शनात् तेजःसंयोगासमवायिकारणकत्वं पच्चधर्मतावलात् सिध्यति ॥ ७ ॥

* अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥८॥ *

रूपरसगन्धस्पर्शानेकत्वान्यत्वेन व्युत्पाद्य परिमाणस्य सर्वसिद्धत्वेन सङ्ख्यायाञ्च विप्रतिपत्तिबाहुल्यादुद्देशक्रममतिक्रम्य सूचीकटाहन्यायेन प्रथमं परिमाणपरीक्षामारभमाण आह ।

नित्ये इति विषयेण विषयिणं नित्यत्वप्रतिपादकं चतुर्थाध्याय-मुपलक्षयति उपलब्ध्यनुपलब्धी इति यथायोगमन्वयः "येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः" इति न्यायेन, तथाचाणोरनुपलब्धि-रिति लभ्यते तदेवं स्थूलो नीलः कलस इति प्रात्यक्षिकप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि तेन च परिमाणेन परमाणु-पर्य्यन्तं परिमाणमुन्नीयते द्रव्यत्वाच्च किञ्च द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणं न हि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति तथाच द्रव्यप्रत्यक्षकारणत्वेन स्वयञ्च प्रत्यक्षतया परिमाणं गुणोऽस्तीति निश्चीयते यदि हि घटादिस्वरूपं परिमाणं स्यात् तदा महदानये-त्युक्ते घटमात्रमानयेत् तथाच प्रैषसंप्रतिपत्ती विरुध्येयाताम्, एवं घटपदात् परिमाणं प्रतीयेत परिमाणपदाद्वा घट इति, मानव्यव-हारासाधारणकारणत्वं द्रव्यवाच्यात्कारकारणविषयनिष्ठसामान्यगु-णत्वं वा महत्त्वत्वं मानव्यवहारो हस्तवितस्त्यादिव्यवहारो न तु पल-सङ्ख्यादिव्यवहारः, तच्च परिमाणञ्चतुर्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्व-त्वञ्च, तत्र परममहत्त्वपरमदीर्घत्वे विभुचतुष्टयवर्त्तिनी परमाणुत्वपर-मह्रस्वत्वे परमाणुवर्त्तिनी अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्त्तिनी त्रसरेणुमारभ्य महावयविपर्य्यन्तं महत्त्वदीर्घत्वे, एवञ्च सर्वाण्यपि द्रव्याणि परिमाणवन्ति, बिल्वामलकादावणुत्वव्यवहारः समिदि-क्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः, भक्तिश्चात्र प्रकर्षभावाभावः, आमलके यः प्रकर्षभावस्तदभावः कुवले, बिल्वे यः प्रकर्षभावस्तदभाव आमलके, स च गौणमुख्योभयभागित्वात् भक्तिपदवाच्यः, दीर्घ-

त्वह्रस्वत्वे नित्ये न वर्त्तेते इत्येके, परिमाण एव ते न भवत इत्यपरे, महत्सु दीर्घमानीयतामितिवत् महत्सु वर्त्तुलं त्रिकोणञ्चानीयतामिति निर्धारणवलाद्वर्त्तुलत्वादीनामप्यापत्तेरिति तेषामाशयात् ॥ ८ ॥

* कारणबहुत्वाच्च ॥ ९ ॥ *

इदानीं परिमाणकारणानि परिसङ्ख्ष्टे ।

चकारो महत्त्वप्रचयौ समुच्चिनोति, परिमाणमुत्पद्यते इति सूत्रशेषः, तत्र कारणबहुत्वं त्र्यणुके महत्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात् तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषोपग्रहो नियामकः, एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकं वक्ष्यते द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहुत्वप्रचययोस्तत्राभावात् यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणं बहुत्वस्याभावात् महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षं प्रत्यप्रयोजकत्वात् एवञ्च सति यदि महत्त्वं तत्र कारणं तदा न दोषः तदुक्तं "द्वाभ्यामेकेन सर्वैर्वा" इति । प्रचयश्च आरम्भकः संयोगः, स च स्वाभिमुखकिञ्चिदवयवासंयुक्तत्वे सति स्वाभिमुखकिञ्चिदवयवसंयोगलक्षणः, स चावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः गुणकर्मारम्भो सापेक्ष इति वचनात् ॥ ९ ॥

* अतो विपरीतमणु ॥ १० ॥ *

महत्त्वदीर्घत्वे व्युत्पाद्याणुत्वं व्युत्पादयति ।

अतः प्रत्यक्षसिद्धान्महतः परिमाणाद्यद्विपरीतं तदणुपरिमाणमित्यर्थः । वैपरीत्यञ्चाप्रत्यक्षत्वात् कारणवैपरीत्यं च, महत्त्वे हि महत्त्वबहुत्वप्रचयानां कारणत्वम्, अणुत्वे च कारणगतस्य द्वित्वस्येश्वरापेक्षा बुद्धिजन्यस्य कारणत्वम्, एतेन दीर्घत्वविपरीतं ह्रस्वत्वमित्यपि द्रष्टव्यम्, वैपरीत्यञ्चात्रापि पूर्ववत् ॥ १० ॥

* अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥ *

इदानीं कुवलामलकादावणुत्वव्यवहारो भाक्त इति दर्शयति ।

इतिशब्दो व्यवहारपरतां दर्शयति, तेन बिल्वापेक्षया कुवलमणु कुवलापेक्षयामलकं महत् आमलकापेक्षया बिल्वं महदिति तावद्व्यवहारोऽस्ति, तत्र महदिति तेषु व्यवहारो मुख्यः, कुत एवमत आह विशेषभावात् महत्त्वविशेषस्यैव तरतमादिभावेन भावात्, अणुव्यवहारस्तु तेषु भाक्तः, कुत एवमत आह विशेषाभावात् अणुत्वविशेषस्य तत्राभावात्, अणुत्वं हि कार्य्यं द्व्यणुकमात्रवृत्ति, नित्यं परमाणुवृत्ति, कुवलादौ तदभावात् यद्वा विशेषस्य महत्त्वकारणस्यैवावयवबहुत्वमहत्त्वप्रचयानां कुवलाद्यवयवेषु भावात् सद्भावात् विशेषाभावात् विशेषस्य अणुत्वकारणस्य महत्त्वासमानाधिकरणद्वित्वस्य कुवलाद्यवयवेष्वभावादसद्भावादित्यर्थः ॥ ११ ॥

* एककालत्वात् ॥ १२ ॥ *

अणुत्वव्यवहारो भाक्त इत्यत्र हेतुमाह ।

महत्त्वमणुत्वञ्च द्वयमप्येकस्मिन् कालेऽनुभूयते, ते च महत्त्वाणुत्वे परस्परविरोधिनी नैकत्राश्रये सह सम्भवतः, अतो महत्त्वकारणसद्भावान्महत्त्वप्रत्ययस्तत्र मुख्योऽणुत्वप्रत्ययप्रयोगौ च भाक्तावित्यर्थः ।१२॥

* दृष्टान्ताच्च ॥ १३ ॥ *

महत्त्वप्रत्ययस्य मुख्यत्वे हेतुमाह ।

दृश्यते तथा वस्तुगत्या महत्स्वेव कुवलामलकबिल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारेण भवितव्यमित्यर्थः यथा वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फटिकादिषु शुक्लशुक्लतरशुक्लतमव्यवहारः ॥ १३ ॥

* अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥ *

नन्वणु महत्परिमाणमितिव्यवहारबलान्महत्त्वे अपि परिमाणे

महत्त्वमणुत्वेऽप्यणुत्वमस्तीति ज्ञायते तत् कथं द्रव्यमात्रवृत्तित्वमनयोः कथं वा गुणे गुणवृत्तित्वविरोधो नापद्यत इत्यत आह ।

यथा गुणकर्मणी नाणुत्वमहत्त्ववती तथाऽणुत्वमहत्त्वे अपि नाणुत्वमहत्त्ववती इत्यर्थः प्रयोगश्च भाक्तो द्रष्टव्यः ॥ १४ ॥

* कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥ १५ ॥ *

ननु यथा गुणा गुणवन्तः कथमन्यथा महान् शब्दः द्वौ शब्दौ एकः शब्दः चतुर्विंशतिर्गुणा इत्यादिव्यवहारः, कर्माण्यपि च कर्मवन्ति प्रतीयन्ते कथमन्यथा शीघ्रं गच्छति द्रुतं गच्छतीति व्यवहारः तथाचाणुत्वमहत्त्वे अपि तद्वती स्यातामित्यत आह ।

कर्मभिः कर्माणि न तद्वन्ति गुणैश्च गुणा न तद्वन्तस्तथाऽणुत्वमहत्त्वेऽपि न तद्वती, व्यवहारस्तु सर्वत्र भाक्त इत्यर्थः ॥ १५ ॥

* अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥ *

ननु महान्ति कर्माणि अणूनि कर्माणि महान्तो गुणाः अणवो गुणा इत्यादिव्यवहारादणुत्वमहत्त्ववन्ति कर्माणि तदुभयवन्तश्च गुणाः प्रसक्ता इत्यत आह ।

यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तथा न कर्माणि तदुभयवन्ति न वा गुणास्तदुभयवन्त इत्यर्थः, प्रयोगस्तु पूर्ववद्भाक्त इति भावः ॥ १६ ॥

* एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ १७ ॥ *

अणुत्वमहत्त्वप्रक्रियां दीर्घत्वह्रस्वत्वयोरतिदिशति ।

ह्रस्वत्वदीर्घत्वे अपि न ह्रस्वत्वदीर्घत्ववती महत्त्वोत्पादकमेव दीर्घत्वोत्पादकमणुत्वोत्पादकमेव ह्रस्वत्वोत्पादकम्, कारणैक्यात् कथं कार्य्यभेद इति चेन्न प्रागभावभेदेन पाकजवदुपपत्तेः यत्रैव महत्त्वं तत्र दीर्घत्वं यत्राणुत्वं तत्र ह्रस्वत्वं यत्र नित्यमणुत्वं तत्र नित्यं ह्रस्वत्वमित्याद्यतिदेशार्थः ॥ १७ ॥

* अनित्येऽनित्यम् ॥ १८ ॥ *

इदानीं विनाशिकमाह ।

एतच्चतुर्विधमपि परिमाणं विनाशिनि द्रव्ये वर्त्तमानमाश्रयनाशादेव नश्यति न तु विरोधिगुणान्तरात् । घटे सत्यपि तत्परिमाणं विनश्यति कथमन्यथा कम्बुभङ्गेऽपि स एवायं घट इति प्रत्यभिज्ञेति चेन्न व्याश्रयनाशेन तत्र घटनाशावश्यकत्वात् न हि परमाणुद्वयसंयोगनाशाद् द्व्यणुके नष्टे तदाश्रितस्य त्रसरेणोस्तदाश्रितस्य चूर्णशर्करादेरविनाश इति युक्तिरभ्युपगमो वा, कथं तर्हि प्रत्यभिज्ञेति चेत्, सैवेयं दीपकलिकेतिप्रत्यभिज्ञानवद्भ्रान्तित्वात् । प्रदीपप्रत्यभिज्ञाऽपि प्रमैव ह्रस्वत्वदीर्घत्वे परन्तुत्पादविनाशशालिनी इति चेन्न तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्तेरुक्तत्वात् ॥ १८ ॥

* नित्ये नित्यम् ॥ १९ ॥ *

तत् किं पार्थिवपरमाणुरूपादिवत् परमाणुगतमणुत्वं शब्दबुद्ध्यादिवदाकाशादिगतं महत्त्वमपि नश्यतीत्यत आह ।

नित्येष्वाकाशादिषु परमाणुषु च यत् परिमाणं तन्नित्यं विनाशकाभावात् ॥ १९ ॥

* नित्यं परिमण्डलम् ॥ २० ॥ *

परमाणुपरिमाणस्य वैशेषिकसिद्धां संज्ञामाह ।

परिमण्डलमेव पारिमाण्डल्यं तदुक्तम् "अन्यत्र पारिमाण्डल्यादिभ्यः" इति ॥ २० ॥

* अविद्या च विद्यालिङ्गम् ॥ २१ ॥ *

ननु कुवलामलकादिषु समिदिक्षुप्रभृतिषु च व्यवह्रियमाणमणुत्वं ह्रस्वत्वं वा यदि न पारमार्थिकं तदा पारमार्थिकयोस्तयोः किं प्रमाणमत आह ।

विद्यालिङ्गमविद्या तदयमर्थः कुवलामलकादावणुत्वज्ञानं समिदिक्षुप्रभृतिषु ह्रस्वत्वज्ञानं तावदविद्या तत्र पारमार्थिकाणुत्वह्रस्वत्वयोरभावात्, सर्वत्राप्रमा प्रमापूर्विकैव भवतीत्यन्यथाख्यातिवादिभि-

रभ्युपगमात् तथाच सत्यमणुत्वज्ञानं सत्यञ्च ह्रस्वत्वज्ञानमनुमेयमित्यर्थः एवञ्च भाक्तः शब्दप्रयोगो मुख्यमन्तरेण न भवतीति मुख्ये अणुत्वह्रस्वत्वे क्वचिदवश्यं मन्तव्ये ॥ २१ ॥

* विभवान्महानाकाशस्तथाचात्मा ॥ २२ ॥ *

द्रव्यत्वेन हेतुनाकाशादीनामनुमितस्य परिमाणस्य स्वरूपमाह ।

विभवः सर्वमूर्त्तसंयोगित्वं तच्च परममहत्त्वमन्तरेणानुपपद्यमानं परममहत्त्वमनुमापयति, दृश्यते चेह वाराणस्यां पाटलिपुत्रे च युगपदेव शब्दोत्पत्तिस्तत्र चैकमेवाकाशं समवायिकारणमित्याकाशस्य व्यापकत्वं सिद्धं व्यापकत्वञ्च परममहत्परिमाणयोग एव नानाकाशकल्पने गौरवमित्येक एवाकाशोऽभ्युपगन्तव्यः। आकाशस्य प्रदेश इति तु व्यपदेशः प्रदेशवद्भिर्घटादिभिः संयोगनिबन्धनो भाक्तः अस्ति च प्रदेशवद्द्रव्यसंयोगित्वम् । तथात्मेति यथाकाशं विभवात् सर्वमूर्त्तसंयोगित्वात् परममहत् तथात्मापि परममहान् यद्यात्मनः सकलमूर्त्तसंयोगित्वं न भवेत् तदा तेषु तेषु मूर्त्तेषु अदृष्टवदात्मसंयोगात् क्रिया नोत्पद्येत व्यधिकरणस्यादृष्टस्य प्रत्यासत्त्यपेक्षया क्रियाजनकत्वात् सा च प्रत्यासत्तिरदृष्टवदात्मसंयोग एव एवं सञ्चारिणि शरीरे तत्र तत्र ज्ञानसुखादीनामुत्पत्तिरात्मनो वैभवमन्तरेणानुपपन्नेत्यात्मापि व्यापकः स च नाकाशवदेक एव व्यवस्थादर्शनादित्युक्तमिति भावः तच्च महत्त्वं सातिशयं नित्यञ्च परमाण्वणुत्ववत् एवमाकाशादौ परमदीर्घत्वं परमाणुषु च परमह्रस्वत्वमूहनीयम् ॥ २२ ॥

* तदभावादणु मनः ॥ २३ ॥ *

ननु मनो विभु सर्वदानिरवयवद्रव्यत्वादाकाशवत् ज्ञानाद्यसमवायिकारणसंयोगाधारत्वादात्मवदित्याकाशात्मनोः साहचर्य्येण मनोऽपि विभु नोक्तमत आह ।

तस्य विभवस्य सर्वमूर्त्तसंयोगित्वस्याभावादणु मनः सकलमूर्त्तसंयोगित्वे तु युगपदनेकेन्द्रियसंयोगे ज्ञानयौगपद्यं स्यात् तथाच

व्याघातो न स्यात्, अनुमाने तु मनो यावन्न सिद्धं तावदाश्रयासिद्धे मनःसिद्धिदशायान्तु धर्म्मिग्राहकमानबाधिते । ननु विभवाभावादेवं नाणुत्वं सिध्यति घटादौ व्यभिचारादिति चेन्न विभवाभावेनाव्यापकत्वसाधनात् तथाचैकदेहे मनस्तावदेकं नानाकल्पने गौरवापत्तेः एकस्याप्यवयवकल्पने कल्पनागौरवान्निःस्पर्शत्वेनानारम्भकत्वाच्चेत्यादियुक्तेरणुत्वसिद्धेरिति भावः ॥ २३ ॥

* गुणैर्दिग् व्याख्याता ॥ २४ ॥ *

दिशः परममहत्त्वे युक्तिमाह ।

गुणैः सकलद्वीपवर्त्तिपुरुषसाधारणपूर्वापरादिप्रत्ययरूपैः सकलमूर्त्तनिष्ठपरत्वापरत्वलक्षणैः दिगपि व्यापकत्वेन व्याख्यातेत्यर्थः । परत्वापरत्वयोरुत्पत्तौ संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वविषयापेक्षाबुद्धेः कारणत्वस्य वक्ष्यमाणत्वात्, नानादिक्कल्पनस्य कल्पनागौरवप्रतिहतत्वात्, कथं तर्हि दश दिश इति प्रतीतिव्यपदेशाविति चेन्न तत्तदुपाधिनिबन्धनत्वादित्युक्तत्वात् ॥ २४ ॥

* कारणे कालः ॥ २५ ॥ *

कालस्य व्यापकत्वमाह ।

परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणे द्रव्ये काल इति समाख्या न तादृशः प्रत्ययः सर्वदेशपुरुषसाधारणः कालस्य व्यापकतामन्तरेण सम्भवतीति तस्य व्यापकत्वं परममहत्त्वयोग इत्यर्थः । यद्वा इदानीं जात इत्यादिप्रतीतिबलात् सर्वोत्पत्तिमन्निमित्तकारणत्वं कालस्य प्रतीयते तदपि व्यापकत्वाधीनं निमित्तकारणस्य समवायिसम्बन्धादिकारणप्रत्यासन्नत्वनियमात् । यद्वा अतीतानागतवर्त्तमानव्यवहारः सार्वत्रिक इति सर्वगत एव कालः । यद्वा क्षणलवमुहूर्त्तयामदिनाहोरात्रपक्षमासर्त्त्वयनसंवत्सरादिव्यवहारकारणे द्रव्ये काला-

स्येति व्यवहारस्य सार्वत्रिकत्वात् कालः सार्वत्रिक इति परमतहान् तस्य नानात्वकल्पना च कल्पनागौरवप्रतिहतेत्युक्तम् ॥ २५ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे सप्तमाध्यायस्या-
द्यमाह्निकम् ।

---

## द्वितीयाह्निकम् ।

---

* रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥ *

द्वितीयाह्निके एकानेकवृत्तिगुणपरीक्षाप्रकरणम् अनेकमात्र-वृत्तिगुणपरीक्षाप्रकरणं प्रसङ्गाच्छब्दार्थसम्बन्धपरीक्षाप्रकरणं विशेष-गुणरहितविभुसंयोगासमवायिकारणकैकवृत्तिगुणपरीक्षाप्रकरणं सम-वायपरीक्षाप्रकरणञ्चेति तत्र सङ्ख्यैकार्थसमवायाधीनं सङ्ख्यादीना-मपि प्रत्यक्षत्वमिति चोद्देशक्रममतिक्रम्य परिमाणनिरूपणानन्तरं सङ्ख्यां पृथक्त्वञ्च परीक्षितुमाह ।

रूपरसगन्धस्पर्शेति सङ्ख्यादिपञ्चकभिन्नगुणोपलक्षणं व्यतिरेका-दिति व्यभिचारात् तदयमर्थः, एको घट इति विशिष्टप्रतीतिर्विशेष-णजन्या, तच्च विशेषणं न रूपादि, तद्व्यतिरेकेण जायमानत्वात्, न च घटत्वादिकमेव निमित्तम्, पटेऽपि जायमानत्वात्, न चैकत्वं सत्तावत् सामान्यम्, सत्तया सहान्यूनानतिरिक्तवृत्तित्वात्, न च द्रव्यमात्रसामान्यं तत्, द्रव्यत्वेनान्यूनानतिरिक्तदेशत्वात् न चान्यूना-नतिरिक्तदेशत्वेऽपि प्रतीतिभेदाद्भेदः प्रतीतिभेदस्य स्वरूपकृतत्वे सत्ता-ऽपि भिद्येत, विषयभेदकृतत्वे तु विषयभेदानुपपत्तेरुक्तत्वात् अन्यथा घटत्वकलशत्वयोरपि भेदापत्तेः, न च स्वरूपाभेद एकत्वमिति भूषण-मतं युक्तम्, घटस्वरूपाभेदश्चेदेकत्वं तदा पटादावेकत्वप्रत्ययो न स्यात्,

स्वरूपभेदो द्वित्वादिकमित्यपि भूषणमतमनुपपन्नं स्वरूपभेदस्य त्रिचतुरादिसाधारण्येन व्यवहारवैचित्र्यानुपपत्तेरिति भावः ॥ १ ॥

* तथा पृथक्त्वम् ॥ २ ॥ *

एकत्वतुल्यतयैकपृथक्त्वमपि साधयितुमाह ।

अपोद्धारव्यवहारस्तावदस्ति इदमस्मात् पृथगन्यदर्थान्तरमित्याकारः, अपदृश्यावधिमपेक्ष्य य उद्धारो निर्द्धारणं स ह्यपोद्धारः, तत्र च न रूपादि तन्त्रं व्यभिचारादवध्यनिरूप्यत्वाच्च, नन्वन्योन्याभाव एव पृथक्त्वम्, इदमस्मात् पृथगन्यदर्थान्तरमितिवद्भिन्नमिति प्रतीतेरन्योन्याभावावलम्बनत्वात्, न पृथगादिशब्दानां पर्य्यायत्वेऽपि नान्योन्याभावार्थत्वं तत्र पञ्चमीप्रयोगानुपपत्तेः इदमस्मात् पृथक् इदमिदं न भवतीतिप्रतीत्योर्भिन्नविषयत्वात् न चान्योन्याभाववानर्थः पृथक्त्वम् अघटः पट इत्यत्रापि पञ्चमीप्रयोगापत्तेः, ननु पृथगिति विशिष्ट इति प्रतीत्योरेकाकारत्वाद्वैशिष्ट्यमेव पृथक्त्वमिति चेन्न मैत्रस्य दण्डवैशिष्ट्यदशायां मैत्रात् पृथगयं मैत्र इत्यपि प्रतीत्यापत्तेः एवं शब्दविशिष्टे व्योम्नि बुद्धिविशिष्टे चात्मनि पृथक्त्वव्यवहारापत्तेः, अत एव वैधर्म्यमपि न पृथक्त्वं पाकरक्ते घटे श्यामाद्घटात् पृथगयं घट इति व्यवहारापत्तेः तद्विरोधिधर्मवत्त्वमेव हि तद्वैधर्म्यं तच्च श्यामानन्तरं रक्ततादशायामपि न च सामान्यमेव पृथक्त्वं सामान्यस्यावध्यनिरूप्यत्वात् जातिसङ्करप्रसङ्गाच्च सन्मात्रवृत्तित्वे सत्तया, द्रव्यमात्रवृत्तित्वे द्रव्यत्वेनान्यूनानतिरिक्तवृत्तित्वापत्तेः ॥ २ ॥

* एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥ *

नन्वेकमेकत्वं, रूपादिभ्यः पृथक् पृथक्त्वमिति व्यवहारादेकत्वेऽप्येकत्वं, पृथक्त्वेऽपि पृथक्त्वमेवं तत्र तत्रापीत्यत आह ।

यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तद्व्यवहारस्तत्र भाक्तस्तथैकत्वैकपृथक्त्वे नैकत्वैकपृथक्त्ववती तद्व्यवहारस्तत्र भाक्त इत्यर्थः ।

